# [ २ ]

## सप्तसु स्मरणेषु प्रथमं नमस्कारस्मरणम् ।

नमो अरिहंताणं ।
नमो सिद्धाणं ।
नमो आयरियाणं ।
नमो उवज्झायाणं ।
नमो लोए सव्वसाहूणं ।
एसो पंचनमुक्कारो,
सव्वपावप्पणासणो ।
मंगलाणं च सव्वेसिं;
पढमं हवइ मंगलं ॥

### ( १ ) श्रीसिद्धिचन्द्रगणिकृता व्याख्या ॥

श्रीनाभेयः श्रियं दधात्; सुरासुरनमस्कृतः । [1]विभ्रानेकपपञ्चास्यो, दधद् विश्वजनीनताम् ॥ १ ॥
अकब्बरसुरत्राणहृदयाम्बुजषट्पदः । भानुचन्द्रश्चिरं जीयाद्, गुरुर्मे वाचकाग्रणीः ॥ २ ॥
अष्टोत्तरशतानां योऽवधानाना विधायकः । दधानः खुश्फहमिति, विरुदं शाहिनाऽर्पितम् ॥ ३ ॥
तेन वाचकचन्द्रेण, सिद्धिचन्द्रेण सर्वदा । बुद्धिवृद्ध्यै वितन्द्रेण, बालानामल्पमेधसाम् ॥ ४ ॥
शश्वत् सप्तस्मरणानां, वृत्तिरेषा विधीयते । तत्र तावन्नमस्कारः, एव व्याख्यायते मया ॥ ५ ॥
त्रिभिर्विशेषकम् ।

नमो अरिहंताणमिति । नमो—नमस्कारः । केभ्यः ? 'अर्हद्भ्यः' शक्रादिकृता पूजां सिद्धिगतिं चार्हन्तस्तेभ्यः । उक्तं च ( आवश्यकनिर्युक्तौ नमस्कारनिर्युक्तौ ४०६ तमे पत्राङ्के )—

"अरिहंति वंदणनमंसणाइं अरिहंति पूयाइसक्कारं । सिद्धिगमणं च अरिहा, अरिहंता तेण वुच्चंति" ॥ १ ॥

नमो—नमस्कारः । केभ्यः ? 'सिद्धेभ्यः' सितं—प्रभूतकालेन बद्धं अष्टप्रकारं कर्म शुक्लध्यानाग्निना ध्मातं—भस्मीकृतं यैस्ते निरुक्तिवशात् सिद्धास्तेभ्यः इति 'बहुव्रीहिः' । यदुक्तं ( आव० नम० ४३८ तमे पत्राङ्के )—

"दीहकालरयं जं तु, कम्मं[2] से सिअमट्ठहा ।
सिअं धंतं ति सिद्धस्स, सिद्धत्तमुवजायइ ॥" ॥ २ ॥

---

**नोंधः**—१. उपाध्याय श्रीसिद्धिचंद्रगणिकृत व्याख्या अने २. श्रीहर्षकीर्तिसूरिकृत टीकानो अनुवाद अहीं आप्यो नथी केमके, तेनो भावार्थ श्रीअभयदेवसूरीए रचेली व्याख्याना अनुवादमा प्रकारान्तरे आवी ज जाय छे ।

१ अनेकपाः हस्तिनः ।

२ पाठान्तरम्—जंतुकम्मं से सिअमट्ठहा ।

नन्वेवमाचार्यादि सा प्राप्नोति, क्वचित्काले आचार्येभ्य सकाशादर्हदादीना ज्ञायमानत्वात्, अत एव च तेपामेवात्यन्तोपकारित्वात्, नैवम्, आचार्याणामुपदेशदानसामर्थ्यमर्हदुपदेशत एव, न हि स्वतन्त्रा आचार्यादय उपदेशतोऽर्थज्ञापकत्व प्रतिपद्यन्ते, अतोऽर्हन्त एव परमार्थेन सर्वार्थज्ञापका , तथा अर्हत्परिषद्रूपा एवाचार्यादयोऽतस्तान नमस्कृत्यार्हन्नमस्करणमयुक्तम् , उक्त च—

" ण य कोइवि परिसाए, पणमित्ता पणमए रन्नो " त्ति ॥[1] ५ ॥

---

शङ्का—जो तमे एम कहेशो तो आचार्योने ज प्रथम नमस्कार करवो जोइए, कारणके कोईक काळे अरिहत वगेरे आचार्यो द्वारा ज जणाय छे तेथी आचार्यो ज अत्यत उपकारी छे ।

समाधान—ए वात बराबर नथी, कारणके आचार्योमा उपदेश आपवानु सामर्थ्य अरिहतना उपदेशमाथी ज आवे छे, आचार्यो स्वतत्र रीते उपदेशथी अर्थोने जणावता नथी। ( अरिहते जे आपेलो उपदेश तेना आधारे ज आचार्यो उपदेश आपता होय छे, परतु स्वतत्र रीते नहीं ) तेथी वस्तुत अरिहतो ज सर्व अर्थोने जणावनारा छे । वळी आचार्य वगेरे तो अरिहतनी पर्षदारूप छे, माटे तेमने ( आचार्य वगेरेने ) नमस्कार करीने अरिहतोने नमस्कार करवो ते अनुचित छे । ( आवश्यकनिर्युक्तिमा ) कह्यु छे के—"कोई पण माणस पर्षदाने प्रणाम करीने पछी राजाने प्रणाम करतो नथी ।"

## परिचय

जैन आगमग्रथो पैकी पाचमा अग तरीके प्रसिद्ध 'श्रीव्याख्याप्रज्ञप्तिसूत्र', जेनु बीजु नाम 'श्रीभगवतीसूत्र' छे, तेमा मगलाचरणरूपे श्रीनमस्कारसूत्रना पचपरमेष्ठी पदोनो उल्लेख प्रथम करवामा आव्यो छे । ते सूत्र उपर नवागीवृत्तिकार श्रीअभयदेवसूरिए व्याख्या रची छे । तेमाथी पाच पदोनी व्याख्या पूरतो भाग अहीं लेवामा आव्यो छे ।

आगमोदय समिति ( सूरत ) द्वारा वि स १९७४ मा प्रकाशित 'श्रीमद् भगवतीसूत्रम्' भा १ मा आ व्याख्या छपायेली छे । तेमा मुनिराज श्रीपुण्यविजयजी महाराजे प्राचीन अनेक हस्तलिखित प्रतिओ साथे मेळवीने मूळमा तथा व्याख्यामा पाठातरो नोंघेला छे । तेना आधारे आ सूत्र अने व्याख्या अमे अहीं मुद्रित करी छे । तेनो गुजरातीमा भावानुवाद करीने ते पण साथे प्रगट करेल छे ।

आ टीकाना कर्ता श्रीअभयदेवसूरि, श्रीजिनेश्वरसूरिना शिष्य हता । श्रीअभयदेवसूरिने वि स १०८८ मा आचार्यपद मळ्यु हतु अने स ११२० थी ११२८ सुधीमा नव अगो पर तेमणे टीका रची हती । ए सिवाय 'पचाशक प्रकरण', 'आगम अष्टोत्तरी प्रकरण' वगेरे अनेक ग्रथो रच्यानी माहिती मळे छे ।[2]

---

१ आव० नि० गा० १०२१ जुओ प्रस्तुत ग्रथ पृ० १५९ २ तेमनी विशेष माहिती माटे जुओ 'श्रीअभयदेवसूरि'। ले प श्री बेचरदास, प्रका श्री वाडीलाल एम् पारेख, कपडवज ।

च पञ्चपरमेष्ठिनमस्काररूपं प्रथमसरणमादौ व्याख्यायते 'नमो अरिहंताणं' इत्यादि । अत्र पाठत्रयम्— अरहंताणं, अरिहंताणं, अरुहंताणं । तत्र अर्हन्ति सुरेन्द्रादिकृता पूजां इत्यर्हन्तः तेभ्योऽर्हभ्द्यः । अरीन्-रागद्वेषादीन् घ्नन्तीति अरिहन्तारः तेभ्योऽरिहन्तृभ्य. । न रोहन्ति—नोत्पद्यन्ते दग्धकर्मबीजत्वात्, पुनः संसारे न जायन्ते इत्यरुहन्तः तेभ्योऽरुहभ्द्यो नमो नमस्कारोऽस्तु । प्राकृतत्वात् चतुर्थ्यर्थे षष्ठी ॥१॥

तथा नमः सिद्धेभ्यः । 'षिञ् बन्धने' ( पाणिनीयधातुपाठे १४७८ ) सितं—बद्धं प्रस्तावादष्टविधं कर्म तद् धमिति ध्मातं—शुक्लध्यानाग्निना दग्धं—भस्मीकृतं यैस्ते निरुक्तिवशात् सिद्धाः । यद्वा सिद्धिगतिनामधेयं स्थान प्राप्ताः सिद्धाः । यद्वा सिद्धाः—सुनिष्ठितार्था मोक्षप्राप्त्या अपुनर्भवत्वेन सम्पूर्णार्थास्तेभ्य सिद्धेभ्यो नमः ॥ २ ॥

तथा नम आचार्येभ्यः । स्वयं ज्ञानादिपञ्चविधाचारवन्तोऽन्येषामपि तत्प्रकाशकत्वाद् आचारे साधव आचार्याः तेभ्यः । योग्यः कुशलो हितश्च साधुरुच्यते ॥ ३ ॥

तथा नम उपाध्यायेभ्यः । उप—समीपमागत्य येभ्यः सकाशादधीयत इत्युपाध्यायाः । अथवा उप—समीपे अध्यायो—द्वादशाङ्ग्याः पठनं सूत्रतोऽर्थतश्च येषा ते उपाध्यायाः तेभ्यः उपाध्यायेभ्यो नमः ॥ ४ ॥

तथा नमो लोके सर्वसाधुभ्यः । सम्यग्ज्ञान—दर्शन—चारित्रादिभिः साधयन्ति मोक्षमार्गमिति साधवः । लोके—सार्धद्वयद्वीपलक्षणे पञ्चचत्वारिंशल्लक्षयोजनप्रमाणे मनुष्यलोके सर्वे च ते साधवश्च । यद्वा सार्वस्य—अर्हतः साधवः सार्वसाधवः, तेभ्यो नमः—नमस्कारोऽस्तु ॥ ५ ॥

एषः—पूर्वोक्तः 'पञ्चनमस्कारः' पञ्चानाम्—अर्हत्—सिद्धाऽऽचार्योपाध्याय—सर्वसाधूनां नमस्कारः—प्रणामः, सर्वपापप्रणाशनः—( समस्तदुरित ) निवारकः ।

पुनः सर्वेषां मङ्गलानां—मङ्गलकारकवस्तूना दधि—दूर्वा—ऽक्षत—चन्दन—नालिकेर—पूर्णकलश—स्वस्तिक—दर्पण—भद्रासन—वर्धमान—मत्स्ययुगल—श्रीवत्स—नन्द्यावर्तादीनां मध्ये प्रथमं— मुख्यं मङ्गलं मङ्गलकारको भवति । यतोऽस्मिन् पठिते जपिते[1] स्मृते च सर्वाण्यपि मङ्गलानि भवन्तीत्यर्थः ॥६—९॥

इदं च सरणमनादिभूतं, यतो जिनानां चतुर्विंशतयोऽनन्ताः सञ्जाताः अनन्ताश्च भविष्यन्ति तदा सदैवेदमेव, अतोऽनाद्यनन्तमित्यर्थः ॥

अत्र पदानि नव ( ९ ), सम्पदः अष्टौ ( ८ ), अक्षराणि अष्टषष्टिः ( ६८ ), लघ्वक्षराणि एकषष्टिः ( ६१ ), गुर्वक्षराणि सप्त ( ७ ) ज्ञेयानि ॥

नागपुरीयतपोगण—राजः श्रीहर्षकीर्तिसूरिवरः ।
प्रथमसरणे व्याख्यां, सङ्क्षेपाद् विहितवान् सम्यक् ॥

॥ इति प्रथमसरणव्याख्या ॥

---

१ जप्ते ।

नमो—नमस्कार । केभ्य ? 'आचार्येभ्य' स्वय पञ्चविधाचारवन्तोऽन्येषामपि तत्प्रकाशकत्वाद् आचारे साधव आचार्यास्तेभ्य इति 'तत्पुरुष' । यथा ( आव० नम० ४४८ तमे पत्राङ्के, विशेषावश्यकेऽपि गा० ३१९० )—

" पचविहमायार, आयरमाणा तहा पयासंता ।
आयार दसंता, आयरिया तेण वुच्चति ॥ "

'अनुयोगकृदाचार्य' इति हैम ( अभिधानचिन्तामणा का० १, श्लो० ७८ ) ॥ ३ ॥

नमो—नमस्कार । केभ्य ? 'उपाध्यायेभ्य' उप एत्य—समीपमागत्य येभ्य सकाशादधीयन्त इत्युपाध्याया तेभ्य इति 'तत्पुरुष' । यदुक्त ( आव० नम० ४४८ तमे पत्राङ्के, विशेषावश्यकेऽपि गा० ३१९७ )—

"बारसगो जिणक्खाओ सज्झाओ कहिओ बुहेहिं ।
त उवइसंति जम्हा उवज्झाया तेण वुच्चति ॥"

"उपाध्यायस्तु पाठक" इति हेम ( अभि का १ श्लो ७८ ) ॥ ४ ॥

नम —नमस्कार । केभ्य ? 'लोके सर्वसाधुभ्य' । लोके—मनुष्यलोके सम्यग्ज्ञानादिभिर्मोक्षसाधका सर्वसत्त्वेषु समाश्चेति साधव , सर्वे च ते स्थविरकल्पिकादिभेदभिन्ना साधवश्चेति सर्वसाधवस्तेभ्य इति 'कर्मधारय' । यथा—

"निव्वाणसाहए जोए, जम्हा साहति साहुणो ।
समा य सव्वभूएसु, तम्हा ते सव्वसाहुणो" ॥ ५ ॥

एष पञ्चनमस्कार । एष—प्रत्यक्षो विधीयमान पञ्चानामर्हदादीना नमस्कार—प्रणाम । स च कीदृश ? 'सर्वपापप्रणाशन' सर्वाणि च तानि पापानि च सर्वपापानि इति 'कर्मधारय' । सर्वपापाना प्रकर्षेण नाशनो—विध्वसक सर्वपापप्रणाशन इति 'तत्पुरुष' । सर्वेषा द्रव्य—भावभेदभिन्नाना मङ्गलाना प्रथममिदमेव मङ्गलम् । 'होइ मगल' इति पाठस्त्वप्रामाणिक , सर्वत्र "हवइ मगल" इत्येव दर्शनात् । च समुच्चये । पञ्चसु पदेषु चतुर्थ्यर्थेषु षष्ठी । अत्र चाष्टषष्टिरक्षराणि, नव पदानि, अष्टौ च सम्पदो—विश्रामस्थानानि, तत्र सप्त षट्कपदा, अन्त्या तु द्विपदा इति नमस्कारार्थ ॥ ६–९ ॥

## ( २ ) श्रीहर्षकीर्तिसूरिकृता व्याख्या ॥

प्रणिपत्य जिन वक्ष्ये, नमस्कारेषु विवरण किंचित् । यस्मान्मन्दमतीनामपि भवति सुखेन तद्बोध ॥ १ ॥

यत पर्वदिनेषु सकलश्रेयोऽर्थं क्षुद्रोपद्रवादिदोषनिवारणार्थं च पारणादौ मुनशान्त्यर्थं च सप्त जिनस्मा[नि]ण्य स्मर्यन्ते—गुण्यन्त इति सप्त स्मरणान्युच्यन्ते । तेष्वादौ चतुर्दशपूर्वाणामादिभूत अनाद्यन्त

## [ ३ ]

# नमस्कारान्तर्गत–पदविशेषानेकार्थाः ।

### ( १ ) पण्डितगुणरत्नमुनिवरकृता नमस्कारप्रथमपदार्थाः ॥

( नमोऽर्हद्भ्यः ) नमो अरिहंताणं । नमोऽर्हद्भ्य इति मुख्योऽर्थः ॥ १ ॥

( नमोऽरि–हन्तृभ्यः ) अरयः–वैरिणस्तेषां हन्तारः अरिहंतारः–सर्ववैरिविनाशकाः, चक्रवर्तिनः इत्यर्थः, तेभ्यो नमोऽस्तु इति तत्सेवकवचः ॥ २ ॥

( नमोऽरि–हन्तृभ्यः ) अथवा अरा विद्यन्ते यत्र तत् अरिचक्रं, तेन हन्तारो–वैरिविनाशकाः, चक्रवर्तिन इत्यर्थः, तेभ्यो नमोऽस्तु ॥ ३ ॥

( न-मोदा-ऽरि ह-त्राणम् ) हो-जलं तस्य त्राणं-रक्षणं, सरोवरमित्यर्थः, तद् वर्तते किंभूतम् ? मोदो-हर्षः तस्य अरिरिव अरिः शोकः, न विद्यते मोदारिः–शोको यस्मात् तद् नमोदारि । नखादि-[1]गणान्नञोऽवस्थानम् । "प्रक्रियां नातिविस्तरा" ( सारस्वतादौ ) इत्यादिवत् ॥ ४ ॥

( नम ओ अरि-हं त्राणम् ) अरि-चक्रं हन्ति-गच्छति प्राप्नोति इति अरिहं–चक्रधरं, विष्णुम् । 'नम' इति क्रियापदं पञ्चम्या मध्यमपुरुषैकवचने । किंभूतं विष्णुम् ? त्राणं शरणभूतं, तत्सेवकानाम् । 'ओ' इति सम्बोधने ॥ ५ ॥

( नमोदलि ह-तानं ) हो-जलं तस्मात् तानो-विस्तारः उत्पत्तिः यस्य तत् हतानं-कमलम् । [ तद् ] वर्तते । किंभूतम् ? 'नमोदलि' नमः–प्रह्वीभावः तेन उत्-प्रबला उद्धता [2]अलिनः–भ्रमरा यत्र एवंविधम् । अनुस्वाराभावः चित्रत्वात्, रलयोरैक्यं च तस्मादेव ॥ ६ ॥

( नमोदरि हन्ता-ऽऽनम् ) नमो अरि० । नमं-नमत् उदरं नमोदरं, नमोदरं विद्यते यस्य तत् नमोदरि, बुभुक्षाक्रान्तोदरं भिक्षाचरवृन्दमित्यर्थः । तद् वर्तते, किंभूतम् ? 'हन्ताणं' हन्तशब्देन भिक्षा उच्यते । देशीभाषया हन्त-भिक्षा, तया आनं-जीवनं यस्य [ तत् ] हन्तानम् ॥ ७ ॥

( न मोअ-लिह-त्राणम् ) मोअशब्देन प्रश्रवणम् । '[3]अणाहारे मोअनिंवाइ' इति प्रश्रवणस्य लिहः-पानकारी । 'लिहीक् आस्वादने' ( सिद्ध० धा० ) तस्यैवंविधकष्टकर्तुरपि त्राणं शरणं न स्यात् । ज्ञानं विनेत्युपस्कारः । "सोपस्काराणि सूत्राणि भवन्ति" इति न्यायः ॥ ८ ॥

( न मौकलि-हन्ना-ऽऽनम् ) मौकुलिः-वायसः 'स्वराणां स्वराः' ( सिद्ध० ८. ४. २३८. ) इत्यकारः । तस्य हन्ता–घातकः, तस्य आनं–जीवनं न स्यात् । लोके हि एवं रूढिः–"वायसस्य भक्षकश्चिरजीवी स्यात् ।" तत्रायं अर्थो न समर्थः । तस्य हननेऽपि अधिकं जीवनं नैवेत्यर्थः ॥ ९ ॥

---

**नोंध** पं गुणरत्नमुनिकृत–'नमस्कारप्रथमपदार्था' अने श्रीदेवरत्नसूरिए रचेल 'पञ्चमपदगत'सव्व'–शब्दनी अनेकार्थीनो अनुवाद शब्दशास्त्रीओने मूळथी ज जाणी शकाय एवो छे, तेथी तेनो अनुवाद पण अहीं आप्यो नथी.

१ 'नखादयः' इति सिद्धहैमे ( ३–२–१२८ )

२. 'अलयः' इति ख–पाठ ।

३. श्रीदेवेन्द्रसूरिकृतस्य प्रत्याख्यानभाष्यस्य पञ्चदशगाथायाश्चतुर्थचरणमिदम् । सम्पूर्णा गाथा चैवम्—
"खाइमे भत्तोसफलाइ साइमे सुंठि-जीर-अजमाइं । महु-गुड-तवोलाइ, अणाहारे मोअनिंवाइ ॥"

## परिचय

प्रथम टीकाना रचयिता श्रीसिद्धिचद्रगणि छे, तेओ श्रीभानुचद्रगणिना शिष्य हता । तेमणे सस्कृत भाषामा अनेक ग्रथो अने टीकाओ रची छे । तेओ फारसी भाषाना पण जाणकार हता अने मात्रिक हता । सम्राट् अकबर अने जहागीरना दरबारमा एक विशिष्ट विद्वान् तरीके आदर पाम्या हता[1] ।

तेमणे सात स्मरणो उपर टीका रची छे, ते पैकी 'नमस्कारसूत्र' परनी टीका-श्रेष्ठी देवचद्र लालभाई पुस्तकोद्धार फड ग्रथाक ८१ मा प्रसिद्ध 'अनेकार्थरत्नमजूषा' ना परिशिष्टमा आपेली छे, तेमाथी उद्धृत करवामा आवी छे ।

बीजी टीकाना कर्ता श्रीचद्रकीर्तिसूरि ( नागोरीतपागच्छीय )ना शिष्य श्रीहर्षकीर्तिसूरि छे । तेओ सत्तरमा सैकाना प्रसिद्ध विद्वान् हता । तेमणे अनेक टीकाग्रथो उपरात वैद्यक विषयना 'वैद्यकसारोद्धार' अने 'योगचिंतामणि' जेवा ग्रथो रचेला छे । वळी 'सारस्वत-दीपिका' नामक व्याकरण ग्रथनी टीका पण रचेली छे ।

तेमणे सात स्मरणो उपर टीका रची छे, ते पैकी नमस्कारसूत्र उपरनी टीका उपर्युक्त 'अनेकार्थरत्नमजूषा' ना परिशिष्टमाथी लेवामा आवी छे ।



१ तेमनी विशेष माहिती माटे जुओ प्रस्तावना 'भानुचद्रचरित' प्रकाशक -सिंघी जैन ग्रंथमाला, अमदावाद ।

( नमोऽर्हद्भ्यः ) अर्हन्तः-सामान्यकेवलिनः तेभ्यो नमः ॥ २० ॥

( नमोऽर्हद्भ्यः ) अर्हद्भ्यः-पूज्येभ्यो मातापित्रादिभ्यो नमः ॥ २१ ॥

( नं ओ अर्हन्तं अत णं ) 'ओ' इति सम्बोधने। नं-बुद्धिं अर्हन्तं-प्राप्नुवन्तं बुद्धिनिधानं मन्त्रिणम्। 'अत सातत्यगमने' ( सिद्ध० धा० )। अत-जानीहि। 'गत्यर्था ज्ञानार्थाः' इति। 'स्वराणां स्वराः' ( सिद्ध० ८. ४. २३८. ) इत्याकारः। 'णं' वाक्यालङ्कारे ॥ २२ ॥

( नमोऽर्हतः ) अर्हतः-स्तुल्यान् सत्पुरुषान् [प्रति] नमः, सुग्-द्विषार्हः-सत्रि-शत्रु-स्तुत्ये इति ( सिद्ध० हे० ५. २. २६ ) ॥ २३ ॥

( नं अर्हतः उअ ) नं-ज्ञानम्, अर्हतः-प्राप्तान् श्रुतकेवलिनः। 'उअ पश्य' ( सिद्ध० ८. २. २१२. ) ॥ २४ ॥

( न-मा-ऊ-अरिहं ता अणं ) नं-ज्ञानं तस्य मा-प्रामाण्यम्। उः-धारणं तस्य अरिहं-योग्यं। ज्ञानप्रामाण्यवादिनं जनं त्वं अण-वद। 'अणरण [ वण-व्रण-त्रण-भण-भ्रण-मण-धण-ध्वण-ध्रण-कण-क्वण-चण शब्दे ]' ( सिद्ध० धा० ) इति दण्डकधातुः। ता-तावत् प्रक्रमे। अन्तेऽनुस्वारः प्राकृतत्वात् ॥ २५ ॥

( नमः अर्हा-ऽन्त-अणं ) अर्हः-प्रान्तोऽन्तो यैः। एवंविधा 'अण'त्ति अनन्तानुबन्धिनो यस्य तम्, पदैकदेशे पदसमुदायोपचारात्। सम्यग्दृष्टिपुरुषं क्षायिकसम्यक्त्ववन्तं प्रति नमः ॥ २६ ॥

( नम उत-लिहं त्राणं ) त्राणं-भोजनभाजनमण्डनयोग्यं वस्तु, तं नम-अन्तर्भूतणिगर्थत्वात् प्रह्वीकुरु, मण्डयेति भोजनकारिवचः। तत् किंभूतम्? उतं-सम्बद्धं, लिहं-भोजनं यस्मात् [ तत् ] ॥ २७ ॥

( नमौको-ऽर्हं तार्णम् ) तार्णं-तृणसमूहो वर्तते। किंभूतम्? नमं-नमत् कुटीरप्रायं यत् ओको-गृहं तस्यार्हैः तृणैराच्छाद्यते गेहमिति ॥ २८ ॥

( न मोदा-ऽरि-हं तृणम् ) तृण वर्तते। किंभूतम्? 'मोदारिहं' मोदो-हर्षः तत्प्रधाना अरयस्तान् हन्ति-हिनस्ति मोदारिहम्। 'न' इति निषेधे। तृणमुखास्ते वैरिणो जीवन्तीत्यर्थः ॥ २९ ॥

( न-मोदा-ऽरि हन्त ऋणम् ) ऋणं वर्तते। 'हन्त' इति खेदे। किंभूतम्? 'नमोदारि' नं-बुद्धिः मोदः-हर्षः तस्य अरिः-वैरिभूतं वर्तते। ऋणे सति बुद्धिहर्षौ नश्यत इत्यर्थः ॥ ३० ॥

( नं मोऽरिभा-ऽतः णं ) अरिभं-रिपुनक्षत्रं तत्र अतः-गमनं यस्य सः। 'अत सातत्यगमने' ( सिद्ध० धा० ) एवंविधो मः-चन्द्रः। नं-बन्धनं, विग्रहमित्यर्थः तम्। "णकारो निष्फले प्रकटे च" ( सुधा० एकाक्षरनाममाला श्लो० २२ ) इति वचनात् णं-निष्फलम्। करोतीत्यध्याहारः। "अरिहन्ताग्रे प्रथमैकवचनस्य व्यत्ययोऽप्यासाम्" (          ) इति वचनादपभ्रंशापेक्षया 'स्यम्-जस्-शसां लुक्' ( सिद्ध० ८. ४. ३४४. ) इति लुक्। एवमन्यत्रापि ज्ञेयम् ॥ ३१ ॥

( न मोऽरि-भं आकः अ-णं ) भशब्देन राशिरप्युच्यते, भवनमपि, ततो अरिभं-रिपुभवनम्। यदा मः-चन्द्रो न आकः-न प्राप्तः तदा अणं-सफलं कार्यं स्यादिति शेषः। षष्ठभवने चन्द्रस्त्याज्य इत्यर्थः ॥ ३२ ॥

( न-मोदा ऽऽरि भ त्राणम् ) 'हताण' भानि नक्षत्राणि तेषा त्राण-रक्षण यस्य, सर्वनक्षत्रत्राता, चन्द्र इत्यर्थ । 'पश्यत' इति क्रियाऽध्याहार । चन्द्र किंभूतम् ? 'नमोआरि' नो-बुद्धि मोदो-हर्ष आर-प्रापणम्, आरो विद्यते यस्य स आरी, बुद्धिमोदयो आरी । शुभे चन्द्रे हि शुभा बुद्धि हर्षश्च प्राप्यते । 'आरि' इत्यत्रानुस्वाराभावो न दोषाय, चित्रत्वात् । 'ख घ थ-ध भा ह्' ( सिद्ध० ८ १ १८७ ) इत्यादौ भकारस्य हकार कचित् आदावपि भवतीति वचनात्, बाहुलकाच्च ॥ १० ॥

( न-मोदा ऽर्ह त्राण ) त्राण-सत्पुरुषशरण वर्तते । किंभूतम् ? 'नमोदार्ह' नो ज्ञान मोदो-हर्ष तयो अर्ह-योग्यम् ॥ ११ ॥

( नृ-मोदर्ह तानम् ) तान-वस्त्रम् । लोके हि तानकयोगाद् वस्त्रनिष्पत्ति । कारणे कार्योपचारात् तान-वस्त्रम् । किंभूतम् ? 'नमो अरिह' नृणा-मनुष्याणा मा-शोभा, तस्या उदर्ह-भृश योग्यम्, मनुज-शोभाकारि इत्यर्थ ॥ १२ ॥

( नमोदरी हन्त आ-नम् ) 'हन्त' इति खेदे । नम-नमत् कृश उदर यस्या सा नमोदरी कृशोदरी, स्त्री इत्यर्थ । सा 'आन' आ-समन्ताद् न-बन्धनम् । स्त्रिय सर्वत्र बन्धनरूपा इति ॥ १३ ॥

( नम अर्हदाज्ञाम् ) 'अरिहताण' अर्हदाज्ञा प्रति नम-प्रह्वीभवेति शिष्यस्य कथनम् ॥ १४ ॥

( न मोपरि हन्ता ) म शिव । 'शिव'शब्देन मोक्षो ज्ञेय । तस्य उपरि हन्ता-गन्ता न वर्तते कश्चिद् जीव, मुक्तेरुपरि अलोकसद्भावेन कस्यापि गमनाभावात् । 'हन्ता' इत्यत्र 'हनक् हिंसा-गत्यो' ( सिद्ध० धा० ) इति गत्यर्थ ॥ १५ ॥

( न म उअ र इह अ-तानम् ) इह-जगति अ परब्रह्म तस्य तान-विस्तार त्व 'उअ पश्य' ( सिद्ध० ८ २ २११ ) सर्वस्मिन् जगति ब्रह्मैवास्तीति वेदान्तिमतम् । न म-विधाता, "मश्चन्द्रे [ च ] विधौ शिवे" ( श्रीसुधाकलशप्रणीतायामेकाक्षरनाममालिकाया श्लो० ३४ ), विधाता-जगत्कर्ता कोऽपि तन्मते न वर्तते इत्यर्थ ॥ १६ ॥

( न मा ऊ अ रि हा-ऽतानम् ) न विद्यते रा-द्रव्य यस्य तद् अरि, निर्द्रव्य कुलमित्यर्थ । तत् किम्भूतम् ? 'हताण' हो निरास तस्य अतान-लाघव यस्य तत् । निर्धनस्य गृहलाघव स्यात् । तानो-विस्तार, अतान लाघवम् । 'न मा' इति निषेधद्वय प्रकृतमर्थं ब्रूते । 'ऊ' इति पूरणे ॥ १७ ॥

( नमोत्परिघ ता ऽऽनम् ) त-तस्कर तस्य आ-समन्ताद् न-बन्धनम् । किंभूतम् ? 'नमोत्परिघ' नमन्-आरत परतोऽपि द्वारादिषु मिलन् उत्-प्रबल परिघ-अर्गला यत्र तदेव चौरबन्धन स्यात् ॥ १८ ॥

( न मा ऊ अरि-ह सन्तानम् ) अरी-प्राप्नुवन् हकारो यत्र । एतावता सकार तस्मात् अन्तान इति योज्यते । तदा स(सा ? )न्तान इति स्यात् । तत सन्तान मा-लक्ष्मी च ऊ-रक्षण न स्यात्, दुर्गतिपातन इति ॥ १९ ॥

---

१ 'गमन नास्ति' इति ख-पाठ ।

२ उअ पश्येत्यस्यार्थे श्रीहेमचन्द्रसूरिभि प्राकृतव्याकरणस्य स्वोपज्ञवृत्तौ निर्दिष्टेय गाथा यथा—
"उअ निच्चलनिप्फन्दा भिसिणी पत्तम्मि रेहइ बलाआ ॥"

( नमोऽजा-ऽर्हं-ता-अणं ) अजः—सर्वज्ञः तस्य अर्हः—पूजा तस्य तां—शोभां अणति—वदति उपदिशति यः तं पुरुषं [ प्रति ] नमोऽस्तु। पूजास्थापकः पूजार्हः स्यादित्यर्थः ॥ ४३ ॥

( न मोऽर्हा—ऽन्ता—ऽणः )

"अन्तःस्वरूपे निकटे, प्रान्ते निश्चय-नाशयोः। अवयवेऽप्यथाऽर्हन् स्यात्, पूज्ये तीर्थकरेऽपि च ॥" (हैमे का० २, श्लो० १७१.)

इति वचनाद् मः—शिवोऽस्ति। किंभूतः? 'अर्हान्ताणः' अर्हं—सर्वेषां योग्यम् अन्तः—स्वरूपं तस्य अण—उपदेष्टा। 'अण शब्दे' ( सिद्ध० धा० )। "मश्चन्द्रे [च] विधौ शिवे" ( सुधा० श्लो. ३४ ) इत्येकाक्षरनिघण्टुः। ईश्वरः सर्वपदार्थयथास्थितवादी न स्यात्, तदुक्ततत्त्वव्यभिचारात् ॥ ४४ ॥

( नमोऽजा-ऽरिहं ता-ऽणं ) अजः—छागः तेन, 'ऋक् गतौ' ( सिद्ध० धा० ) इयर्ति अजारीः—छागवाहनो वह्निः शीलार्थे इन्। तं 'हिंट् गति-वृद्ध्योः' ( सिद्ध० धा० ) हाययति—वर्धयतीति अजारिहः—वह्निवर्धकोऽग्निहोत्री, तं पुरुषं नमोऽस्तु इत्युपहासः। तं किम्भूतम्? 'ताणं' तां—शोभाम् अणति ताणः, वयं अग्निहोत्रिण इत्यभिमानी ॥ ४५ ॥

( न मोचां अलि-हन् अत णं ) "मोचा शाल्मलि-कदल्योर्मोचा शिग्रौ" इत्यनेकार्थः ( हैम० का० २, श्लो० ७३. ) मोचा-शाल्मली तां त्वं न अत। 'अत सातत्यगमने' ( सिद्ध० धा० ) मा गच्छेति। यतः 'अलिहन्' अलीनां-भ्रमराणां हन्—गमनं, णं—निष्फलं वर्तते। 'हनंक् हिंसा-गत्योः' ( सिद्ध० धा० ) क्विपि रूपम्। भ्रमराणां भ्रमणं निष्फलं, सौरभरहितत्वात्। ततस्त्वं मा गच्छेति मित्रस्योक्तिः ॥ ४६ ॥

( नमोऽरि-हतेभ्यः ) [1]अरयः—वैरिणः अष्टविधकर्माणि। यदुक्तं ( आवश्यकनिर्युक्तौ गा० ९२०. )—

"अट्ठविहं पि अ कम्मं अरिभूअं होइ सव्वजीवाणं। तं कम्ममरिं हंता अरिहंता तेण वुच्चंति ॥"

इति तैर्हतेभ्यः कर्मपीडितेभ्यो नमोऽस्तु। इति उपहासनमस्कारः ॥ ४७ ॥

( न मोचं अर्हत्-त्राणम् ) 'अरिहं' अर्हन्—तीर्थकरः तस्य त्राणं—शरणं, न मोचं-न मोच्यमिति ॥४८॥

( न मोचं अर्हत्—त्राणम् ) अर्हन्—तीर्थकरः तस्य त्राणं—शरणं न मोच्यम् ॥ ४९ ॥

( न मोचं अरि-ह-त्राणम् ) अरि—अष्टविधं कर्म हतवन्तः ते अरिहाः—सिद्धाः तेषां त्राणं शरणं न मोच्यम् ॥ ५० ॥

( न मः मोदा-ऽरि—हतानाम् ) मोदारिः—शोकः तेन हताना—पीडितानां न मः—शिवं न स्यात् ॥ ५१ ॥

( न मोदोऽरि—हतानाम् ) अरिहतानां—बाह्यवैरिपीडितानां न मोदः—हर्षो न स्यात् ॥ ५२ ॥

( नमः अरि हतेभ्यः ) अरि इति अव्ययं, सम्बोधने। हतेभ्यो निन्द्येभ्यो नम इत्युपहास्यम् ॥५३॥

---

१ 'नमो० अरिभिर्हतानाम्—अष्टविधकर्मपीडितेभ्यो नमः-उपहासनमस्कार.' इति ख—पाठः।

२ 'जिन.' इति ख—पाठः।

( नमोदरि-ह ता अन ) ता—तावत् अन—शकट वर्तते । किभूतम् ? 'नमो अरिह' नमोऽरिह नम नमत् नीचैर्भवत् पुन ।।उत्-उच्चैर्भवत् एवविध यद् अरिचक्र ताभ्या हन्ति—गच्छति। । शकट हि चक्राभ्या चलतीति ॥ ३३ ॥

( न मोऽरि-हन्ता ण ) म—ईश्वरो वर्तते । किभूत ? 'अरिहन्ता' अर—शीघ्रम् , इ—काम तस्य हन्ता 'ण' अलङ्कारे ॥ ३४ ॥

( न ओजोऽर्हं ता-ऽण ) ता—शोभा तत्प्रधानोऽण—शब्द साधुशब्दो यश । 'न ओजोऽर्हं' ओजो—बल तस्य योग्य न, बलेन यशो न स्यादित्यर्थ । मकारोऽलाक्षणिक । 'अण' इत्यत्र 'लिङ्गमतन्त्रम्' ( सिद्ध० ८ ४ ४४५ ) इति क्लीबत्वेन न दोष ॥ ३५ ॥

( नामू अरमिभान्ता-ऽण ) अरम्-अत्यर्थम् । इभान्त—हस्तिविनाशी सिंह तस्य, अण—शब्द , सिंहनाद इत्यर्थ । त त्व अय—प्राप्नुहि । इति सुभटस्योच्यते । यतो अमू बन्धन न स्यात् । 'स्वराणा स्वरा' ( सिद्ध० ८ ४ २३८ ) इत्योकार ॥ ३६ ॥

( नमोऽजारि-हन्तृभ्य ) "अजश्छागे हरे विष्णौ रघुजे वेधसि स्मरे" ( हैमे का० २, श्लो० ८० ) इत्यनेकार्थवचनाद् अज—ईश्वर सोऽरिर्यस्य स अजारि—कन्दर्प , तस्य हन्तृभ्यो—नीरागेभ्यो नम ॥ ३७ ॥

( न मा ओ अ-लिह त्राणम् ) कस्यचिद् धनवतो धर्मपराङ्मुखस्योच्यते । 'लिहीङ् आस्वादने' ( सिद्ध० धा० ) लिहन लिह् बाहुलकाद् भावे क । न विद्यते लिहो यस्य [ तद् ] अलिहम्—अभक्ष्यत्व अज—क्षिप, त्यजेत्यर्थ । अवतेर्वृद्ध्यर्थात् क्विपि औस्तस्यामन्त्रणे हे ओ ! धनवृद्ध ! मा—लक्ष्मी त्राण न भवतीति, विरतिरेव त्राण स्यादिति अभक्ष्यार्थ त्यजेत्यर्थ ॥ ३८ ॥

( न मोच अज-लिह-तानाम् ) अज—छाग त लिहन्ति भक्षयन्तीति अजलिहा । एवविधास्ता—तस्करास्तेषा मोचो—मोक्षो न स्यात् । ते[1] कर्मभि न मुच्यन्ते इत्यर्थ । मोचन मोच इति णिगन्तादच् ॥ ३९ ॥

( न मोचा लिह-ता न ) मोचा—कदली वर्तते । किभूता ? लिह—भोज्य तस्य ता—शोभा यस्या सा । भोज्ये सारभूता । न नेति निषेधद्वय प्रकृतार्थम् ॥ ४० ॥

( न मा अर्हा ऽन्ता ण ) अर्हा—पूजा तस्या अन्तो—विनाशो यस्या सा अर्हान्ता । ईदृशी मा—लक्ष्मी न भवति । लक्ष्मी सर्वत्र पूजा प्राप्नोतीत्यर्थ । 'ण' अलङ्कृतौ ॥ ४१ ॥

( न मोऽजा-ऽरि-हन्ता न ) मातीति म 'क्वचिड्' ( सिद्ध० ५ १ १७१ ) प्रमाणवेदी पुरुष[2] । किभूत ? अज—परमात्मा तस्य अरि—निषेधक , प्रतिवादीति यावत् , तस्य हन्ता निवारक । परमेश्वर यो न मन्यते त निवारयति । प्रमाणवेत्ता पुरुष , सर्वेन स्थापयतीत्यर्थ । नञ्द्वय प्रकृत्यर्थे ॥ ४२ ॥

---

१ 'कर्ममुक्तिर्न स्यादित्यर्थ ' इति ख-पाठ ।

२ अलङ्कारे इति ख-पाठ ।

( नःमोच-र-हन्ता ऋणम् ) ऋधातोस्तप्रत्यये 'ऋ-ह्री-घ्रा-ध्रा ( त्रोन्दनुदविन्तेर्वा )' ( सिद्ध० ४. २. ७६ इति ऋणप्रयोगः । न ऋणं—क्षीणम् पुरुषं, मोचः—शिग्रुः तस्य 'र'शब्देन रसो हन्ता—घातको भवति । क्षयरोगी पुरुषः शिग्रुरसेन नीरोगः स्यादिति तात्पर्यम् । पदैकदेशे पदसमुदायोपचारात् 'र'शब्देन रसः । नेयं स्वमतिकल्पना **श्रीजिनप्रभसूरिरपि** 'पउमाभवासुपूज्जा' इत्यस्यां गाथायां[1] चतुरनुयोगीं व्याख्यानयद्भिरेवं व्याख्यातम्—"पउ इति पौषः । मा इति माघः । भ इति भाद्रपदः । तत्र अव इति अवमरात्रे सतीत्यर्थः । असु इति असुभिक्षं-दुर्भिक्षं स्यात् । पु इति पुहवी । लोगो पुहवी सोवा, तस्य ज्या ज्यानिः—हानिः स्यादित्यर्थः" । इति द्रव्यानुयोगः ॥ ६४ ॥

( न मोऽलि-हन् त्राणम् ) 'नमो अरिहंताणं' अलिः—वृश्चिकराशिः, तत्र 'हनंक् हिंसा-गत्योः' ( सिद्ध० धा० ) हन्ति—गच्छतीति विचि अलिहन्—वृश्चिकराशिगतो मः—चन्द्रः त्राणं—विपदूरक्षको न भवति । वृश्चिकराशौ चन्द्रस्य नीचत्वाद् दौर्बल्यम् । इति गणितानुयोगः ॥ ६५ ॥

( नमः अलि-हा-ऽन्तेभ्यः ) "अलिः सुरा-पुष्पलिहोः" इति ( हैमे अनेकार्थे का० २, श्लो० ४८०. ) वचनात् अलि—सुरा तां जहाति, अलिहं—सुरावर्जकम् । सुराया उपलक्षणत्वाद् मांसाद्यपि ग्राह्यम् । मद्यादिवर्जकं अन्तः—स्वरूपं येषां तानि अलिहान्तानि—श्राद्धकुलानि तेभ्यो नमः—उद्यमो भवतु । श्राद्धकुलानि उदितानि सन्त्वित्यर्थः ॥ ६६ ॥

( नमः अ रे हं अताणम् ) कश्चिच्छैवो वक्ति, हं—अहं रे—रामविषये नमो-नमस्कारम्, अताणं—अतनवम्, कृतवानित्यर्थः । 'र' शब्देन राम उच्यते एकाक्षरनाममालायाम् । अतनवमिति ह्यस्तन्युत्तमैकवचनम् । अकारः पादपूरणे ॥ ६७ ॥

( नमः अ रे हं अताणम् ) कश्चिज्जैनो वक्ति, अहं रामे नमः नातनवम् । अकारो निषेधे "अमा—नो—नाः प्रतिषेधवाचकाः" इति माला ॥ ६८ ॥

( नमोऽर-भन्ता णम् ) नमो अरहताणं नं-बन्धनं । 'मींग्श् हिंसायां' ( सिद्ध० धा० ) मीनाति—हिनस्ति । उप्रत्यये नमः—बन्धच्छोटकः, बन्दिमोक्षकरः स वर्तते । किम्भूतः ? 'अरहन्ता' रः—नरः, नरः अरः—अमर्त्यः—देव इत्यर्थः । अरान्—देवान् भनक्तीति अरभन्—दैत्यः । तेभ्यः 'तायृङ् सन्तान-पालनयोः' ( सिद्ध० धा० ) तायते इति ताः क्विपि । 'य्वोः प्वय्व्यञ्जने लुक्' ( सिद्ध० ४. ४. १२१. ) इति यलोपे अरहन्ता । बन्दिमोक्षकरः—मन्त्रमण्यादिः पदार्थो दैत्यभयवारको भवति । 'णं' पूरणे ॥ ६९ ॥

( न-मोऽरहन् त्राणम् ) 'न' शब्देन ज्ञानं तच्च पञ्चसङ्ख्यम् । एतावता नं पञ्चसंख्याया मं—ज्ञानं यस्य स नमः—पञ्चमज्ञानवान् केवली 'माङ्क् मान-शब्दयोः' ( सिद्ध० धा० ) । मीयते इति मं—ज्ञानम् । बाहुलकाद् भावे डप्रत्यये सिद्धम् । केवली किम्भूतः ? 'अरहन्' अरा—देवाः तान् हन्ति-गच्छति—प्राप्नोति अरहन् । देवस्य सेव्य इत्यर्थः त्राणं षट्कायरक्षकश्च ॥ ७० ॥

---

१ सम्पूर्णा गाथा चैवम्—

"पउमाभ-वासुपूज्जा, रत्ता ससि-पुप्फदंत ससिगोरा ।
सुव्वय-नेमी काला, पासो मल्ली पियंगाभा ॥"

( नमोऽगा-ऽरि-हो-ऽन्ता-ऽण ) अगा—पर्वता तेषा अरि—इन्द्र तस्य हो—निवास स्वर्ग तस्य अन्त—स्वरूप, "अन्त स्वरूपे निकटे" इति ( हैमे का० २, श्लो० १७१ ) वचनात्, त अणति—वदति य त प्रज्ञापनादिसिद्धान्तवेदिन नम—प्रणतो-ऽस्मीत्यर्थ । अगारिरित्यत्र 'अवर्णो यश्रुति' ( सिद्ध० ८ १ १८० ) न, यकारबाहुल्यकाद् इति ॥ ५४ ॥

( नमोऽर्हं त्वमत णम् ) ण—ज्ञ पण्डित पुरुष त्वम् अत—जानीहि । 'अत सातत्यगमने' ( सिद्ध० धा० ) । 'गत्यर्था ज्ञानार्था'[1] । किम्भूतम् ? नमोऽर्हं प्रणामयोग्यम् ॥ ५५ ॥

( न म-उ अर्हदृणम् ) 'अरिहंताण' अर्हन्—तीर्थंकर तस्य ऋण—कर्म, तीर्थंकरनामकर्मेत्यर्थ । किम्भूतम् ? 'नमो' न—ज्ञान, म—शिव तयो ऊ प्राप्ति यस्मात् । यत् कर्मण्युदिते परमज्ञान मोक्षश्च प्राप्यत एवेत्यर्थ ॥ ५६ ॥

( नमोत्तरी हा-ऽन्ता ) 'नमोत्तरी' नमा—नमन्ती उत्—ऊर्ध्व गच्छन्ती एवविधा तरी—नौ । किम्भूता ? 'हान्ता' ह्—जल तस्य अन्त—प्रान्तो यस्या एवविधा न स्यात् । क्षण नमति क्षणाच्चोर्द्ध्व याति तया नावा जलप्रान्तो न स्यात्, जलप्रान्ते न गम्यते इत्यर्थ ॥ ५७ ॥

( नृ-मोऽरि ह-ता ऽऽन ) ना पुरुष तस्य म—मस्तक । किम्भूत ? 'हतान' "ह शूलिनि करे नीरे" ( सुधा० श्लो० ४५ ) इति ह्—ईश्वर तस्य ता—शोभा ता आनयति-वर्धयति [ इति ] हतान । नरमस्तको हि ईश्वरशोभाकर तदाभरण शिवस्य वर्तते । 'अरि सम्बोधने' ॥ ५८ ॥

( न म अज र हता ऽनम् ) अज—विष्णु, नम—प्रह्वीभव । किम्भूतम् ? 'हतान' हत अन—शकटदैत्यो येन तम् । 'इ-जे-रा पादपूरणे' ( सिद्ध० ८ २ २१७ ) इति सूत्राद् इकारमुक्तो रेफ पादपूरणे ॥ ५९ ॥

( न मा अजोऽरिहन्ता णम् ) अज—रघुतनय, अरिहन्ता—सर्ववैरिविनाशी अभूत् । 'ण' अलङ्कारे 'मा' 'न' इति निषेधद्वय प्रकृतार्थम् ॥ ६० ॥

( नृ-मोद रह तानम् ) 'नमो अरहताण' अयमपि पाठोऽस्ति । ताना एकोनपञ्चाशत्, तान—गीतगान, रेह्-जानीहि । 'रहुण् गतौ' ( सिद्ध० धा० )[2] गत्यर्थाश्च नानार्था । तान किम्भूत ? 'नृमोद' नृणा पुरुषाणा मोदो यस्मात् ॥ ६१ ॥

( न मोचय अर्हदाज्ञाम् ) अनेन पदेन अनुयोगचतुष्टय व्याख्यायते । अरहताण अर्हदाज्ञा न मोचय । मोचा—शाल्मली मोचा करोति मोचयति । मध्यमपुरुषैकवचने मोचयेति सिद्धम् । शाल्मलि तुल्यामसारा जिनाज्ञा मा कुरु । तत्स्वरूपा ता जानीहि इति चरणकरणानुयोग ॥ ६२ ॥

( नम अर्हत्क त्राणम् ) 'अरह' अर्हत्क—साधु, त्राण—शरणभूत नमस्कुरु । पदैकदेशे पदसमुदायोपचारात् अरह—अर्हत्कम् । इति धर्मकथानुयोग ॥ ६३ ॥

---

१ अनन विग्रहेण 'नमो इति पदस्य कर्मविशेषणत्वे सतीति नपुसकत्वे ह्रस्वेन भाव्यम् ।

२ अत्र 'रंह' इति रूपेण भवितव्यम्, अनुस्वाराभावश्चिन्त्यात् । चान्द्रमते णिचोऽनित्यात्वाण्णिजभावे 'रंह' इति सिद्धम् ।

वह्निवर्णसूर्यकान्तादीनि रत्नानि। उपलक्षणादन्यान्यपि रत्नानि ग्राह्याणि। तेषां गणः—समूहोऽस्ति। 'क-ग-च-ज- [त-द-प-य-वां प्रायो लुक्]' (सिद्ध० ८. १. १७७.) इति गलुक्। 'पदयोः सन्धिर्वा' (सिद्ध० ८. १. ५.) इति सन्धिः। यथा चक्काउ—चक्रवाकः। 'णिश समाधौ' (सिद्ध० धा०) नेशति—समाधिं करोति चित्तस्वास्थ्यं निर्मापयतीति डे नः॥ ९१॥

अथाग्निः। (नम ओ अज-रथं त्रि-अणम्) अजः—छागः, रथः—वाहनं यस्य सः अजरथः—वह्निः तं त्र्यणं त्रयोऽणाः शब्दा यस्य सः, त्रिविधोऽग्निरिति कविसमयः। 'ओ' इति सम्बोधने। तं नम—प्रणमेति स्वप्नाः १४॥ ९२॥

(नमो अरहंताणं) नं—ज्ञानं। अरहन्ताणं—अत्यजतां पुरुषाणां उख् भवति। 'उख्नखे' ति गत्यर्थो दण्डकधातुः। 'ओखणं ओग्' विचि सिद्धम्। अन्त्यव्यञ्जनलोपे ओ—गतिर्भवतीत्यर्थः। गतिः सैव या सद्गतिः। यथा "कुले हि जातो न करोति पापं" इत्यत्र कुलं तदेव यत् सत्कुलमिति॥ ९३॥

(नं ओ तर हन्! तां नः) हंसं अणति—श्रयति वाहनतया णिजि क्विपि हन्। 'ओ' इति सम्बोधने। हे हन्!—हे सरस्वति। नः—अस्माकं, नं—ज्ञानं, तां—शोभां च, तर—देहि। 'तॄ' धातुः दाने वर्तते। (अन्यथा विपूर्वोऽपि दाने न प्रवर्तेत) उपसर्गाणां धात्वर्थद्योतकत्वात्, तॄधातौ दानार्थोऽस्तीति॥ ९४॥

(नम् ओ अर अहर् अन्त! णं) अन्तशब्देन [पदैक] देशे [पद] समुदायोपचाराद् हेमन्त इति। अहर्—दिनं, नमतीति नमं—कृशं, हे हेमन्तऋतो! त्व नमं—कृशं दिनं, अर—प्राप्नुहि। 'णं' अलङ्कारे। हेमन्ते दिनलघुता इति प्रसिद्धम्॥ ९५॥

(नमः अरे ह—तानाम्) "रः तीक्ष्णे" इति (विश्वशम्भुनाममालायां श्लो० १०१) वचनात् रं—तीक्ष्णं उष्णमिति यावत्। न रं अरं—अतीक्ष्णः, शिशिरऋतुः इत्यर्थः, तस्मिन् अरे—शिशिरऋतावित्यर्थः। अपभ्रंशे इकारः। 'व्यत्ययोऽप्यासाम्' इति व्यत्ययः स्याच्च। हं—जलं तस्मात् तन्यन्ते—विस्तारं यान्ति, हतानि—जलरुहाणि, पद्मानीत्यर्थः। तेषा नमो नमनं—कृशता भवति। शिशिरे हि कमलानि हिमेन शुष्यन्तीति प्रसिद्धम्॥ ९६॥

(नम् उ सुरभ् हान्तास् णं) हकारोऽन्ते यस्य स हान्तः। सकार इत्यर्थः। तेन असति—शोभते हान्तास्। एवंविधो रभ्शब्दः। पुनः किम्भूतः? 'उ' 'अ' उकारेणासति—शोभते उ अष् 'अन्त्य-व्यञ्जनस्य' (सि० ८. १. ११.) इति षलोपः। उरह् (हः) इति शब्दः स सकारयुक्तः क्रियते तदा सुरह इति जातम्। कोऽर्थः? सुरभिः—वसन्तऋतुः, तमाचष्टे स्तौति इच्छति वा यः पुरुषः स सुरभ् णिजि तलोपे सिद्धम्। क्विप् लोपश्च। उ अरह् इत्यत्र अन्त्यव्यञ्जनलोपः। सुरभ्शब्देन वसन्तस्तावकः पुरुष इत्यर्थः। "णः प्रकटे निष्फले च" (सुधा० श्लो० २२) वचनात् णं—प्रकटं यथा स्यात् तथा नम् स्यात्, नमतीति नम्—प्रह्वीभावः, उद्युक्तः सर्वकर्मणीत्यर्थः॥ ९७॥

(न मोदः रः हा—ऽन्तानः) "रः तीक्ष्णे" (विश्व० श्लो० १०१) इति वचनात्। रः—उष्णः ग्रीष्मऋतुरित्यर्थः। किम्भूतः? हं—जलं अन्तं आनयतीति हान्तानः, ग्रीष्मे जलशोषः स्यादित्यर्थः। मोदयतीति मोदः। एवंविधो न। ग्रीष्मः [प्रायः] परितापकरत्वान्न मोदकृत्॥ ९८॥

(न मा-ऊ अ र-हा-ऽन्तेभ्य । अकार रियन्तीति डे अरा । 'रिंत् गतौ' अकारप्रापका । हकारोऽन्ते येषा ते हान्ता । अकारादयो हकारान्ता वर्णा -इत्यर्थ । 'नमो' न-ज्ञान, मा-शब्द 'माङ्क् मान-शब्दयो' (सिद्ध०, धा०) इति तयो औ -अवगमन भवति । अव धातुरवगमनार्थेऽपि वर्तते । अवन ऊ भावे क्विप् । 'अरहताण' इत्यत्र-चतुर्थी ज्ञेया । वर्णेभ्यो ज्ञान शब्दावगमश्च स्यादित्यथ ॥ ७१ ॥

(नमोदरा-भक्-त्राणम्) त्राणशब्देन बृहत्पूपिकोच्यते जैनमुनिभाषया । ये लोके मण्डका इति प्रसिद्धा ते साधूना त्राणका इति । त्राणाना समूहो त्राणम् । समूहार्थे अण् । त्राण किम्भूतम् ? नम-नमत् उदर यस्या सा नमोदरा-बुभुक्षा, ता भनक्तीति क्विप् ॥ ७२ ॥

(न मोक-रह ता-ऽऽन) "मूको दैत्याऽनागृदीनेषु इत्यनेकार्थसङ्ग्रह । (हैमे का० २ श्लो० ३) मूकाना समूहो मौकम् । 'षष्ठ्या समूहे' (सिद्ध० ६ २ ९) इत्यण् । 'रह त्यागे' (सिद्ध०, धा०) मौक रहति मौकरहो न स्यात् । क ? ता-लक्ष्मीं आनयतीति-तान । धनोपार्जक दीनसमूहवर्जको न स्यात् । दीनसमूह प्रीणयतीति स दीनै सेव्यत इत्यर्थ ॥ ७३ ॥

(नमो-गा ण-रहन्त) "ण प्रगटे निष्फले च प्रस्तुते ज्ञान-बन्धनयो" इति (सुधा०) एकाक्षरनाममाला (श्लो० २२) वचनात् ण-बन्ध कर्मबन्ध इत्यर्थ । त रहन्त-त्यजन्तः पुरुषा 'नमोगा' स्यु । नम-नमस्कार, गच्छन्ति-प्राप्नुवन्तीति नमोगा -नमस्कारार्हा स्यु ॥ ७४ ॥

(नमोच ण-रहन्त) ण-ज्ञान, रहन्त-प्राप्नुवन्त पुरुषाः 'नमोच' स्यु । नमन्तीति डे ना-प्रणामकारिण तान् मोचयन्ति ससारात् नमोच, णिगन्तात् क्विप् । 'रहु गतौ' (सिद्ध० धा०) रहन्त इत्यत्रानुस्वाराभावश्चित्रत्वात् ॥ ७५ ॥

(न मा ऊ अरहन्त ण) 'णसि कौटिल्ये' (सिद्ध०, धा०) नसन न-कौटिल्यम् । अरहन्त-अप्राप्नुवन्त पुरुषा ण-प्रकट यथा स्यात् तथा, अवन्ति-दीप्यन्ते इति क्विपि ऊ । प्राकृतत्वाज्जसलुक् 'स्यम्-जस्-शसा लुक्' (सिद्ध० ८ ४ ३४४) अपभ्रंशे-'व्यत्ययश्च' (सिद्ध० ८ ४ ४४७) इति भाषाव्यत्ययात् प्राकृतेऽपि ॥ ७६ ॥

(न मोऽरि-हन्ता आ न) मृद करोति णिजि अचि म-कुम्भकारोऽस्ति । किम्भूत ? अरिचक्र तेन अहते-दीप्यते अरिहन्ता सेर्लुक् । न न भवतीति भवत्येवेत्यर्थ । आ पादपूरणे ॥ ७७ ॥

(न मोक-रहन्तानाम्) मोक-कायिकी रहन्ताण-त्यजता परिष्ठापयता साधूना नो भवति अविधिना त्यजता न-कर्मबन्ध, विधिना त्यजता तु न-ज्ञान स्यादिति विवक्षयार्थद्वयम् ॥ ७८ ॥

अथ चतुर्दशस्वप्नवर्णनम्—(नम-करी ऋण-हन्ता ण) नम-प्रह्वीभाव सौम्यत्वमिति यावत्, तेन अवति-दीप्यते । अव धातुरेकोनविंशत्यर्थेषु । तत्र दीप्त्यर्थोऽप्यस्ति । नमश्चासौ करी-हस्ती । सोम्यो गज इत्यर्थ । सोऽदु खहेतुत्वात् ऋण-दु ख, कारणे कार्योपचारात् हन्ति-विनाशयति । अण-

हन्ति—गच्छति आचार्यतया प्राप्नोति अदलहन्ता—सुराचार्यः, जीव इत्यर्थः । किम्भूतः । 'आनः' आ समन्तात् नः—ज्ञानं यस्मात् स आनः—ज्ञानदाता । किम्भूतः सन् ? 'नमः' नः—बुद्धिः पञ्चमं भवनं तत्र 'मदुङ् स्तुति-मोद-मद-स्वप्न-गतिषु' मन्दते—गच्छति नमः डप्रत्यये सिद्धम् । लग्ने हि पञ्चमभवनस्थो गुरुर्ज्ञानदाता स्यादिति ॥ १०५ ॥

अथ शुक्रः । ( नम उन्द—ल—भं तानम् ) 'तानः' तकारस्य षोडशव्यञ्जनत्वात् तशब्देन षोडश उच्यन्ते । 'अषी असी गत्यादानयोश्च' ( सिद्ध० धा० ) इत्यत्र चानुकृष्टदीप्त्यर्थाद् 'अस्' धातोः क्विपि अस् इति रूपम् । असः—दीप्तयः किरणा इति यावत् । ततः ताः—षोडश, असः—किरणाः तेषा नः—बन्धो योजना यस्य स तानः—शुक्रः । सन्धौ, दीर्घे 'अन्त्यव्यञ्जनस्य' ( सिद्ध० ८. १, ११. ) इति सलोपे प्राकृते रूपसिद्धिः । व्यञ्जनैश्च सङ्ख्याप्रतिपादनं ग्रन्थप्रसिद्धम् । यदुक्तं आरम्भसिद्धौ[1]—

"विद्युन्मुख १-शूला २-ऽशनि ३-केतूल्का ४-५-वज्र ६-कम्प ७-निर्घाताः ८ ।
ङ ५-ज ८-ढ १४-द १८-ध १९-फ २२-व २३-भ २४ सङ्ख्ये रविपुरत उपग्रहा धिष्ण्ये ॥"

इत्यादि । "षोडशार्चिर्दैत्यगुरुः" इति ( अभिधान० का० २, श्लो० ३४ ) वचनात् तानः—षोडशकिरणः, शुक्र इति यावत् । तं शुक्रं नम; धातूनामनेकार्थत्वाद् भजस्वेत्यर्थः । किम्भूतम् ? ऊ—अरहं । 'उन्दैप् क्लेदने' ( सिद्ध० धा० ) उनत्ति—रोगैः क्लिन्नो भवति उन्दः तस्य । 'लश्चामृते' इति ( सुधा० श्लो० ३९ ) वचनाद् लः—अमृतं तं भवतेऽन्तर्भूतणिगर्थत्वात् 'भूङ् प्राप्तौ' [ सौत्रधातुरयम्, 'भूङ् प्राप्तौ णिङ् ।' सिद्ध० ३—४—१९ ] धातोः प्रापयति डे रूपं उन्दलभः तम्; रलयोरैक्यम् । रोगार्तस्य हि शुक्रोऽमृतदाता सञ्जीवनीविद्या शुक्रस्यैवेति तद्विदः । अथवा "भश्चालिशुक्रयोः" इति ( सुधा० श्लो० ३३ ) वचनाद् भः—शुक्रः । अरः—शीघ्रगामी चासौ भश्च अरभः तं नम—सेवस्व । उ इति सम्बोधनम् । किम्भूतं भम् ? 'तानं' शुभकार्याणि तानयति—विस्तारय[ ती ]ति तानः तम्, शुक्रो हि शीघ्रगामी अनस्तमितः शुभः, शुभकार्याय भवति ॥ १०६ ॥

अथ शनिः । ( नमोऽरं हन्ता आनम् ) "आरः क्षितिसुतेऽर्कजे" इति विश्वप्रकाश ( रवर्गे २२ ) वचनाद् आरः—शनिः । 'स्वराणा स्वराः' ( सिद्ध० ८. ४. २३८. ) इति प्राकृते अर इति जातम् । अथवा अरः कथम्भूतः ? 'आनः' अकारस्य नः—बन्धो यत्रेत्यनया व्युत्पत्त्या आर इति जातम् । आरं—शनिं नमोऽस्तु इत्युपहासनमस्कारः । यतो हन्ता—जनपीडकः तस्माद् हे आर ! त्वां नमोऽस्तु इत्यर्थः ॥ १०७ ॥

अथ राहुः । ( न—म उदरहः तानः ) 'उअरह' उदरेण हीयते उदरहः—राहुः । राहुस्तु उदरहीनः, शिरोमात्ररूपत्वात्, तस्य । किम्भूतः ? 'नमः' 'नशौच् अदर्शने' ( सिद्ध० धा० ) नश्यतीति डे नः । एवंविधो मः—चन्द्रो यस्मात् सः, उपलक्षणत्वात् सूर्योऽपि । राहुस्तु चन्द्र-सूर्यौ सते इति राहोश्चन्द्रनाशः । पुनः किंविशिष्टः ? 'तानः' तः—युद्धं तस्य नः—बन्धो रचना यस्मात् स तथा । राहुसाधनापूर्वं [ सूर्यशशिभ्यां ] युद्धं क्रियते इतीदं विशेषणं युक्तिमत् ॥ १०८ ॥

---

१ आरम्भसिद्धौ प्रथमविमर्शे श्लोक ६३ टीकायाम् । आरम्भसिद्धौ अयं श्लोकः 'नारचंद्र' ग्रन्थाद् उद्धृतः ।

( नमोऽर हन्तान ) उ अर। कोऽर्थ ? । ऋत्वर 'रह त्यागे' ( सिद्ध० धा० ) रह्यते त्यज्यते इति भावे डप्रत्यये र –निन्द्य , न र अर –उत्तम इत्यर्थ । ऋतुपु अर –उत्तम ऋत्वर , सर्वऋतुप्रधान इत्यर्थ । स क इति विशेषणद्वारेणाह–'हन्तान' ह–जल, तानयति–विस्तारयति हन्तान । वर्षा-ऋतुरित्यर्थ । किम्भूत ? 'नम' नमति–प्रह्वीकरोति स्वोपमान् सर्वजनान् करोति अन्तर्भूतणिगर्थत्वाद् नम् । सर्वव्यापारप्रवर्तक इत्यर्थ ॥ ९९ ॥

( नम अरहा-ऽन्त ! न ) 'अरहन्त०' आप –जल । 'रह त्यागे' ( सिद्ध० धा० ) रहन्ति–त्यजन्ति मुञ्चन्तीति अरह –मेघा , तस्य ( तेषा ) अन्त –विनाशो यस्मात् स अरहान्तो–घनात्यय , शरद् इत्यर्थ । हे अरहान्त ! हे शरत् ! त्व । न निषेधे । 'नम' इति क्रियापदम् । मा नम–मा कृशीभव । शरदोऽतिरमणीयत्वादेवमुक्ति ॥ १०० ॥ इति षड् ऋतव सम्पूर्णा ॥

अथ नव ग्रहा वर्ण्यन्ते । तत्र सूर्य-चन्द्रौ पूर्वं, तत्रापि चन्द्र प्रथम सिद्धान्तवेदिना मते । ( नमोऽरम त्राणम् ) "र तीक्ष्णे" इति ( विश्व० श्लो० १०१ ) वचनाद् र –तीक्ष्ण , न र अर , शीत इत्यर्थ । अरा–शीता, मा–कान्ति यस्य स अरम –शीतगु त नमोऽस्तु । चन्द्र किम्भूतम् ? त्राण–शरण, सर्वनक्षत्राणा ग्रहाणा च नायकमित्यर्थ ॥ १०१ ॥

अथ सूर्य । ( नमो च रम ता–ऽऽ-नम् ) रा–तीक्ष्णा, मा–कान्ति यस्य स रम सूर्य इत्यर्थ । रमाय–सूर्याय नम । 'व्यत्ययोऽप्यासाम्' [ आसा ] विभक्तीना व्यत्ययोऽपि स्यादिति वचनात् चतुर्थ्यर्थे द्वितीया । च ,पूर्वोक्तार्थसमुच्चये । किम्भूताय रमाय ? 'तानाय' । "तकारस्तस्करे युद्धे" ( सुधा० श्लो० २३ ) इत्येकाक्षरवचनात् ता –चौरा तेषा आ–समन्ताद् न –बन्धन यस्मात् स तान तस्मै । सूर्योदये हि चौराणा बन्धन भवति ॥ १०२ ॥

अथ भौम । ( न मौ अर ! हन्ताऽऽन ! ) हे अर ! । अर किम्भूत ? 'आन' अकारस्य न –च घो यत्र, एतावता आर –कुज । किम्भूत ? 'हन्त' ह –जल तस्य अन्तो यस्मात् स तथा, एवविधो न, जलदाता इत्यर्थः । किम्भूत सन् ? 'मौ' "मश्चन्द्रे [ च ] विधौ शिवे" इति ( सुधा० श्लो० ३४ ) वचनात् म –चन्द्र , त अवति–प्राप्नोति क्विपि मौ । चन्द्रयुक्तो हि भौमो वर्षाकाले वृष्टिद ॥ १०३ ॥

अथ बुध । ( न मोजो रै० भ तान ) म –ब्रह्मा । स अवति–देवतात्वेन स्वामी भवति क्विपि मौ । स्वाम्यर्थ 'अव' धातु । ततो मौ –रोहिणीनक्षत्र, तस्मात् जायते इति मोज –बुध । "श्यामाङ्गो रौहिणेयो बुध" इति ( अभिधान० का० २, श्लो० ३१ ) वचनाद् 'रिह्' रा –धन, तदेव भ–भवन, धनभवनमित्यर्थ । तत्र गत इति शेष । 'तान' ता–लक्ष्मीं आनयतीति तान एवविधो न ? किन्तु एवविध एवेति काकूक्त्या व्याख्येयम् । धनभवनस्थो हि बुध –लक्ष्मीप्रद इति ज्योतिर्वि॰ । रैशब्दस्य 'एत ऐद्' ( सिद्ध० ८ १ १४८ ) 'स्वराणा स्वरा' ( सिद्ध० ८ ४ २३८ ) इतीकार ॥ १०४॥

अथ गुरु । ( नम अद–र–हन्ता आ–न ) "रश्चामृते" इति ( सुधा० श्लो० ३९ ) वचनाद् र –अमृतम् , अदनम् अद –भोजनम् , अदे–भोजने, र –अमृत येषां ते अदरा –देवा , तान्

अथ प्रकारान्तरैः साधुगुणविशेषप्रकटीकरणार्थं प्राकृतभाषामयं 'सव्व' इति पदं विव्रीयते ।

३. **सार्वाः** । सार्वो जिनस्तस्येमे सार्वाः । ते च ते साधवश्च सर्वसाधवः । जिनोक्तद्रव्य-भावलिङ्गधारिणो जैनमुनय इत्यर्थः । अस्यामवसर्पिण्या श्रीपुण्डरीकाद्याः ।

" पंच य पुत्तसयाइं, भरहस्स य सत्त नत्तूयसयाइं ।
सयराहं पव्वइया, तम्मि कुमारा समोसरणे ॥ ५ ॥"

४. **शर्वो** रुद्रस्तत्समाः । अनङ्गस्य तथा राग-द्वेष-मोहरूपत्रिपुर [ पैः ] वा भसीकरणात् । सकलकर्मशत्रून् प्रति संहारमूर्तित्वाद् वा । शर्वा इव शर्वाः, ते च ते साधवश्च शर्वसाधवः । भावसाधुशिवकुमारवत् ।

"धन्नो सो सिवकुमरो, जो पणसयइत्थिअग्गिकुंडम्मि ।
वसमाणो वि न दद्धो, मयणाइरिऊण संहरणो ॥ ६ ॥"

५. **श्रव्याः** । श्रोतुमुचिता दाक्षिण्य-क्षान्त्यादिगुणैः श्रवणीयचरिताः, ते च ते । श्रीचण्डरुद्राचार्यशिष्यादिवत् ।

"केइ सुसीला सुहम्माइ सज्जणा गुरुजणस्स वि सुसीसा ।
विउलं जणंति सद्धं, जह सीसो चंडरुद्दस्स ॥ ७ ॥"[१]

६. **श्राव्याः** । श्रावणीयचरित्रा अन्येषां प्रत्यनीकनिराकरणेन प्रव[ च ]नप्रभावनादिभिः । विष्णुकुमारादिवत् ।

" जो तित्थस्स पभावणमकासी वेउव्विदेहलद्धीए ।
तं विण्हुं गयतिण्हं, नमामि पत्तं सिवपुरम्मि ॥८॥" ( २–२२ ) *

७. **सव्याः** । अनुश्रोतः सुखात् संसारसागरात्, कष्टानुष्ठानपरतया प्रतीपगामित्वात् प्रतिकूला भवाद् वामगामिन इत्यर्थः ।

"अणुसोअसुहो लोओ, पडिसोओ आसवो सुविहियाणं ।
अणुसोओ संसारो, पडिसोओ तस्स उत्तारो ॥ ९ ॥"[२]

मृगापुत्रादिवत् ।

" दट्ठूण समणमणहं सरित्तु जाइं य भवविरत्तमणो ।
अणुचरिउं मियचरियं, मुक्खं पत्तो मियापुत्तो ॥१०॥" (५–९३)

८. **साव्याः** । सां लक्ष्मीं विविधलब्धिरूपां तदनुपजीवकत्वेन व्ययन्ति संवृण्वन्तीति साव्याः । श्रीसनत्कुमारचक्रिसाध्यादिवत् ।

---

१ उपदेशमाला १६७ * अहीं गाथाओना ( ) आवा कौंसमां अंक आप्या छे ते श्रीधर्मघोषसूरिकृत 'ऋषिमंडलप्रकरण'ना छे । तेमा प्रथम अंक विश्रामनो अने बीजो अंक गाथानो समजवो । जेम बीजा विश्रामनी आवावीसमी गाथा छे, तेम अहीं वधे समजवुं । २ श्रीदशवैकालिकसूत्रम्, चूलिका २, गा० ३

अथ केतु । ( न मा उदरह–त–ऋणम् ) उदरहे –राहु । पूर्ववद् व्याख्या । तस्य त –पुच्छ केतु । "तकारस्तस्करे युद्धे क्रोडे पुच्छे च" ( सुधा० श्लो० २३ ) इत्येकाक्षरवचनम् । केतुस्तु राहु-पुच्छत्वेन ज्योतिर्विदा सम्मत । यत –"तत्पुच्छे मधुहाया आपद्दु.ख विपक्षपरिताप" ( नीलकण्ठ्या [१] ) अत्र तत्पुच्छ इति राहुपुच्छ, केतुरित्यर्थ इति ताजिके । हे उदरह [ त ] [२] त्व ऋण–ऋणवदाचर । मा निषेधे । ऋण यथा दु खदायि तथा केतुरपि उदित सन् जनपीडाकर, तत एवमुच्यते । त्व मा ऋण । नकारोऽपि निषेधार्थे । "द्विर्नद्ध सुनद्ध भवति" इति निषेधद्वय विशेषेण निषेधाय इति ॥ १०९ ॥

अथ नव रसा वर्ण्यन्ते । तत्र पूर्वं शृङ्गाररस । ( नमोदरि ! हन्त अण ) यथा कश्चित् कामी कुपितकामिनीप्रसत्तिकृते वक्ति हे नमोदरि !–हे कृशोदरि ! त्व अण–वद । हन्तेति कोमलामन्त्रणे । नम–नमत्, कृश उदर यस्या सा नमोदरी–क्षामोदरी तस्या सम्बोधनम् ॥ ११० ॥

इति नमस्कारप्रथमपदार्थाः ॥

प० हर्षकुलगणिपादकृना प० समयकलशस्य लघुशिष्येणालेखि( पत ) ।

## ( २ ) आगमिक–श्रीदेवरत्नसूरिरचिताः

नमस्कारमन्त्रान्तर्गत–'नमो लोए सव्वसाहूण' पञ्चमपदगत 'सव्व' शब्दस्यानेकार्था ।

॥ ॥ ॐ श्रीगुरुभ्यो नम ॥

श्रीवीरजिन नत्वा, पञ्चमपरमेष्ठिपदगत किञ्चित् ।
कुर्वेऽर्थलेशदीपनमात्मनि साधुत्वपरिवृद्धयै ॥ १ ॥

नमो लोए सव्वसाहूण । नमो लोके सर्वसाधुभ्य । तत्र 'नम' इति प्रह्वत्वार्थेऽव्ययम् । लोकेऽर्धतृतीयद्वीपसमुद्रादिलक्षणे, ऊर्ध्व तिर्यगधोलोकलक्षणे वा वर्तमानेभ्य ।

१ सर्वे सकलाश्च ते साधवश्च सर्वसाधव ॥

"केवलिणो परमोही, विउलमई सुयहरा जिणमयम्मि ।
आयरिय-उवज्झाया, ते सव्वे साहुणो सरण ॥ २ ॥[१]
चउदस-दस-नवपुव्वी, दुवालसिकारसगिणो जे य ।
जिणकप्पाऽऽहालदिय, परिहारविसुद्धिसाहू य ॥ ३ ॥
खीरासव महुआसव, सभिन्नस्सोय-कुट्ठबुद्धी य ।
चारण वेउव्वि-पयाणुसारिणो साहुणो सरण ॥ ४ ॥"

इति गाथात्रयोक्ता, उपलक्षणादन्येऽप्यशेषविशेषनन्त । अथवा–

२ सर्वे च ते सामायिकादिविशेषणा प्रमत्तादय पुलाकादयो जिनकल्पिक-प्रतिमाकल्पिक-स्थविरकल्पिका स्थितास्थितकल्पिक-कल्पातीतभेदा । प्रत्येकबुद्ध-स्वयबुद्ध–[ बुद्ध ]बोधितभेदा । भारतादिविभेदा सुखम-दु खमादिविशेषिता वा साधव सर्वसाधव, तेभ्य सर्वसाधुभ्यो नमोऽस्त्विति क्रियासटङ्क इति ॥

---

१ चउसरणपयन्ना ३२–३४

"जस्स समयाइवासिय, वित्ताहरिणोवि सुकयपरिणामो ।
रहकारमुणीण गइं, पासू[1] सो जयउ राममुणी ॥ १९ ॥"

१४. सव्याः । 'षूङौच् प्राणिप्रसवे' सूयन्ते जन्यन्ते जनन्या नरजन्मना एते एव महासत्त्वाः स्वप्राणप्रहाणमप्यादृत्य षड्जीवनिकायरक्षापरत्वेन भुवनोपकारिण इति सव्याः वरदत्तादिसाधुवत् ।

"तह होज्जेरियासमिओ, देहे वि अमुच्छिओ दयापरमो ।
जह संथुओ सुरेहिं वि, वरदत्तमहाभागो ॥ २० ॥"

१५. सव्याः । 'सूं प्रसवैश्वर्ययोः', सूयन्ते दुःखाकारकाः सन्तः देवेन्द्रादिभिरपि वन्द्यत्वेन ईश्वरीक्रियन्ते इति सव्याः । दशार्णभद्रराजर्षिवत् ।

"वंदे दसण्णभद्दं, समसीसाए अहो सुरिंदस्स ।
गहिऊण तहा विरइं, जेण पइन्ना सुनिव्वूढा ॥ २१ ॥"

१६. सार्वाः । सां लक्ष्मीं चक्रवर्त्यादिसंपदमपि । 'अर्व् भर्व् शर्व् हिंसायाम्' अर्वन्ति हिंसन्ति दूषयन्ति त्यजन्तीति सार्वाः । स्वयमाभरणोत्तारणसमये श्रीभरतचक्र्यादिसाधुवत् ।

"भरहमहारायरिसिं, गिहिवेसुप्पन्ननाणवररयणं ।
दसहि सहस्सेहि समं, निक्खंतं वंदिमो सिरसा ॥ २२ ॥"( १–४ )

१७. शर्वाः । 'शोच् तक्षणे' शानं शा तनूकरणं, जीवानां परितापजननं तमर्वन्ति स्वदेहबाधयाऽपि स्फेटयन्तीति शार्वाः । मेतार्यादिसाधुवत् ।

"नवपुव्वी जो कुंचगमवराहिणमवि दयाइ नाइक्खे ।
तं नियजीयन्निरविक्खं, नमामि मेयज्जमंतगडं ॥ २३ ॥" ( ५–८६ )

१८. एवं सार्वाः । 'षोच् अन्तकर्मणि' सानं सा क्विप्, अन्तकर्म प्राणिनां हिंसेत्यर्थः । तामप्यर्वन्तीति सार्वाः । कटुतुम्बकभोजिधर्मरुचिमुन्यादिवत् ।

"गुट्ठीभत्ते मासस्स, पारणए रोहिणीइ कडुतुंबं ।
दिन्नं दयाइ भुत्तुं(त्तं), धम्मरुई मुत्तिमणुपत्तो ॥ २४ ॥" ( ५–१२३ )

१९. शर्वाः । 'अर्व् भर्व् शर्व् हिंसायाम्' शर्वन्ति हिंसन्ति परीषहादिशत्रूनिति शर्वाः । रुद्रवा चीति शर्वशब्दः 'शृ हिंसायाम्' वे प्रत्यये सिद्धः । दृढप्रहारिसाधुवत् ।

"छम्मासनिराहारो, तवसोसियघोरकम्मपब्भारो ।
सिद्धिसुहं संपत्तो, दढप्पहारी महासत्तो ॥ २५ ॥"

२०. शर्व्याः । शरं बाणं कुर्वन्ति व्यापारयन्तीति णिजि क्विपि प्रथमा-बहुवचने जसि शरः, बाणक्षेपेण युद्धकारका इत्यर्थः । तान् व्ययन्ति संवृण्वन्तीति शर्व्याः । सङ्ग्रामनिषेधका इत्यर्थः । द्रविडवालि(रि)खिल्लनृपयुद्धवारकचारणश्रमणवत् ।

1 पासू=अपश्यत्

'सो वि य सणकुमारो, सलहिज्जइ जोइ तहासमत्थो वि।
मोत्तूण दव्वरोगे, विकिच्छगो भावरोगाण ॥ ११ ॥"

९ सार्वाणः। सह अर्वणा तुरङ्गमेन वर्तते ते सार्वाण । सार्वाण इव सतुरङ्गा इव शीघ्र भवपथोलङ्घनेन लोपात् सार्वसाधव । गयसुकुमालादिवत् ।

"वदामि नेमिसीस, वयदिणगहिएगराइवरपडिम।
सोमिलकयउवसग्ग, गयसुकुमाल सिव पत्त ॥१२॥ " (३–३२)

१० सार्वाः। सार तत्त्वोपदेशमाचष्टे णिजि सारयतीति सार जिनो गुरुर्वा। त वान्ति गच्छन्ति भवोद्विग्ना सन्त शरणतया सेवन्ते इति सार्वा । रामपुत्रकुब्जवारक–हल्ल–विहल्लादिवत् ।

"जल्णाओ नेमिसीस त्ति, भणतो जमएहिं उक्खित्तो।
सिरिकुज्जवारयमुणी, रामसुओ जयउ सिद्धि गओ ॥१३॥ "[१] (३-४७)

"सामिस्स वय सीस त्ति, चत्तनेरा सुरीइ साहरिया।
सेयणए रयणाए, उववन्ने हल्लय-विहल्ला ॥१४॥" (५–१४६)

"कयगुणरयणा इक्कारसगिणो सोल-बारवरिसवया।
हल्लु जयते पत्तो, अवरो अवराइयविमाणे ॥१५॥ " (५–१४७)

११ सव्याः। वि[ ] पक्षी तस्य आ लक्ष्मी व्या, तया सह वर्तन्ते इति सव्या ।

"सनिहिं च न कुव्विज्जा, लेवमायाइ सजए।
पक्खीपत्त समादाय, निरवेक्खो परिव्वए ॥ १६ ॥ "[२]

इति वचनादल्पसङ्गतया लघुभूतविहारिण पक्षिसमा इत्यर्थ । नमिराजर्षिवत् ।

"सुह वसामो जीवामो, जेसिं मो नत्थि किंचण।
मिहिलाए डज्झमाणीए, न मे डज्झइ किंचण ॥ १७ ॥"[३]

१२ स्वद्वाः। सुष्टु शोभन कृपामयचित्ततया सयतन यथा स्यात्। अप्सु जलेषु नद्याद्युत्तरण-समये वान्ति गच्छन्तीति स्वद्वा । अन्निकासुतगुरुवत् ।

"जाय पयागतित्थ, देवेहि कयाइ(ए) जस्स महिमाए।
गगाए अतगड, त वदे अन्नियापुत्त ॥ १८ ॥" (५-१२२)

१३ शव्याः। 'श दु द्रु शु श्रु स्रु गतौ' शुश्रूयन्ते गम्यन्ते शान्ततया मृगादिभिरपि आश्रीयन्ते इति शव्या । बलदेवमुन्यादिवत् ।

---

१ उद्धि गत, प्राकृतत्वादनुस्वारलोप [ जुआ—ऋषिमण्डलप्रकरण टीका ] २ उत्तराध्ययनसूत्रम् ६–१५। ३ उत्तराध्ययनसूत्रम् ९–१४।

२६. स्राव्याः। स्रावो द्रुः कर्ममलगालनं स्व-परेषां दुष्टरक्तस्राववत्, तत्र साधवः 'तत्र साधौ' यः, स्राव्याः कर्ममलापनयनसमर्था इत्यर्थः। प्रदेशिराजप्रतिबोधककेशिकुमारवत्।

"बहुदुक्खसयसहस्साण, दायगा मोयगा दुहसयाणं।
आयरिया फुडमेयं, केसि पएसी य ते हेऊ ॥ ३४ ॥"[1]

२७. श्राव्याः। श्रावः सिद्धान्तस्य श्रवणं वा परेषां प्राणिनाम्। तत्र साधवः, 'तत्र साधौ' यः, ते श्राव्याः। शकुनिकानमस्कारदातृसाध्व्यादिवत्।

"भरुअच्छे करुणाए, जइ स मुणी सउणीयाए नवकारं।
न हु साविंतो तो कह, सुदंसणा हुंज्ज जयपयडा ॥३५॥"[2]

२८. शार्वाः। शर्वः शिवः, तस्येमे शार्वाः। इन्द्रियसुखाऽनिन्द्रियसुखरूपकामतत्त्व-शिवत्वप्रधाने जगति लोकरूढ्या शिवपक्षीया एते साधवः मोक्षसुखाकाङ्क्षिण इति हृदयम्। जम्बूस्वामिवत्।

"रूवेण जोव्वणेण य, कन्नाहिं सुहेहि वरसिरीए य।
न य लुब्भंति सुविहिया, निदरिसणं जंबुनामु त्ति ॥ ३६ ॥"[2]

२९. शव्वाः। शवन्ति शब्दं कुर्वन्ति। जीवन्तमपि छागादिकं गलामोटनादिना निर्जीवं 'जे णिये' क्विपि, ते शवाः याज्ञिकादयः तान्, 'वांक् गति-गन्धनयोः' गन्धनं परदोषोद्घट्टनं, वान्ति दूषयन्तीति ते शव्वाः। दत्तमातुलश्रीकालिकाचार्यवत्।

"दत्तेण पुच्छिउ जो, जन्नफलं कालओ तुरमिणीए।
समयाइ आहिएणं, सम्मं बुइअं भयंतेणं ॥ ३७ ॥"[3]

यज्ञानां नरकं फलम्।

३०. शव्वाः। 'शर्पी आक्रोशे' शपनं शप् आक्रोशस्तं वान्ति गच्छन्ति प्राप्नुवन्ति परीषहकाले सहन्ते इत्यर्थः, ते शव्वाः। अर्जुनमालाकारसाध्व्यादिवत्।

"छट्ठेणं छम्मासे, सहित्तु अक्कोसतालणाईणि।
अज्जुणमालागारो, खवित्तु परिनिव्वुडो कम्मे ॥३८॥"(५-७६)

३१. पुनः सव्याः। सह विना प्रक्रमाद् गरुडपक्षिणा वर्तते यः स सविः। सव्यासौ अश्वदिग्-विजयोद्यतवासुदेवः सव्यः, तत्तुल्याः शासनप्रतिपक्षदैत्यजेतृत्वात् सव्याः सिद्धसेनभट्टजैत्रश्रीवृद्धवाद्यादिवत्।

"मद्गोः[4] शृङ्गं शक्रयष्टिप्रमाणं, शीतो वह्निर्मारुतश्चाप्रकम्पः।
यद्वा यस्मै रोचते तन्न किञ्चित्, वृद्धो वादी भाषते कः किमाह ? ॥३९॥"[5]

इति तच्छक्तिः।

३२. सव्याः। उश्च इश्च आश्च व्याः हर-काम-ब्रह्माणः, तदभेदोपचारात् तेषां विशिष्टगुणाः। लोकरूढ्या परमयोगित्व-जगत्प्रियत्व-वेदाध्ययनलक्षणास्ते व्याः, तैः सह वर्तन्ते ये ते सव्याः, श्रीगौतमस्वाम्यादिवत्।

---

१ उपदेशमाला १०२। २ उपदेशमाला १५३। ३ आवश्यक निर्युक्ति गा ८७१। ४ मुद्गो.। ५ श्रीवृद्धवादिसूरिचरितम् श्लो. ३२ [जुओः 'प्रभावक चरित' पृ० ५५-सिंघी जैन ग्रन्थमाला]।

"निवद्दविड-वालिखिल्ला, दस दस भडकोडिसजुया जुद्धे ।
पण पण कोडि भडसए, वासारत्त ठिया तत्थ ॥ २६ ॥
सरयम्मि जुद्धसज्जा, चारणसमणेण तत्थ पत्तेण ।
पडिबोहिया ससिन्ना, सिद्धा सत्तुजए सव्वे ॥ २७ ॥"

नमिनृपमातृमदनरेखा-करकण्डुमातृपद्मावतीवद् वा ।

२१ एव शार्व्याः । 'शृश् हिंसायाम्' शरण शारो वध, त करोतीति णिजि क्विपि शार वधक इत्यर्थ । त व्ययन्ति सवृण्वन्तीति शार्व्या । मृगयाप्रसक्तसजयराजप्रतिबोधकगर्दभालिगुरुवत् ।

"सिरिगद्दभालिमुणिदेसणाए मिगयापसगदोसिल्लो ।
सजयनिवो वहाओ, विणियट्टो तक्खणा चेव ॥ २८ ॥"

२२ स्वर्वा । सुष्ठु अर्वन्ति घ्नन्ति सघाद्युपद्रवमिति स्वर्वा । उपसर्गहरस्तोत्रकारश्रीभद्रबाहुस्वाम्यादिवत् ।

"उवसग्गहर थुत्त, काऊण जेण सघकल्लाण ।
करुणापरेण विहिय, स भद्दबाहुगुरू जयउ ॥ २९ ॥"

२३ स्वर्वाः । तथाविधमनोवीर्यायुष्कादिहीनतया मोक्षगमनाभावे स्व स्वर्गमेव वैमानिकदेवगतिलक्षण वान्ति गच्छन्तीति स्वर्वा । धन्यशालिभद्रवत् ।

"ते धन्न-सालिभद्दा, अणगारा दो वि तवमहड्ढिया ।
मास पाओवगया, पत्ता सव्वट्ठसिद्धम्मि ॥ ३० ॥" (४–१५२)

एवमन्येऽपि जघन्यतोऽपि यावत् सौधर्मकल्प यान्ति, नाधस्तात् ।

"छउमत्थसजयाण, उववाओ उक्कोसओ अ सव्वट्ठे ।
तेसिं सड्ढाण पिय, जहन्नओ होइ सोहम्मे ॥ ३१ ॥"

इति वचनप्रामाण्यात् ।

२४ सर्व्या । सर्वेभ्य चराचरजीवेभ्यो हिता, 'तत्र साधौ' (सिद्ध० हे० ७–१–१५) इति य प्रत्यय, ये ते सर्व्या । नौतारणक्रीडानन्तरमिथ्यादुष्कृतपरातिमुक्तकमुन्यादिवत् ।

"छव्वरिसो पव्वइओ, निग्गथ रोइऊण जिणवयण ।
सिद्ध विहुयरयमल, अइमु(त्त) रिसिं नमसामि ॥ ३२ ॥"

२५ सर्व्याः । सर्वो जिन, तस्य शासनप्रभावकत्वाद् हितास्ते सार्व्या । वज्रस्वाम्यादिवत् ।

"शिशुत्वे चारित्र सुरवरपरीक्षाऽप्रतिमघी, पदेर्वा गीर्वाणैर्धनयुवतिमोक्षोऽन्नग्रहणम् ।
सुभिक्षे सघस्यानयनमिद पुष्पैरुपहृतिर्गुरोर्नेत्राज्जैनप्रवचनहितान्येवमभवन् ॥३३॥"

"रिउगणमिव दोसे अप्पणो संहरंतो, जणपयमिव सुत्थं...जायं करिंतो ।
सिरिभरमिव लोए नाणलच्छि जणिंतो, जयइ कुसलकंदो रामचंदो मुणिंदो ॥४७॥"

३९. तथा **स्वव्याः** । सुष्ठु अतिशयेन अव्याः । 'अव् रक्षण[1]-गति[2]-कान्ति[3]-प्रीति[4]-तृप्ति[5]-अवगमन[6]-प्रवेश[7]-श्रवण[8]-स्वाम्यर्थ[9]-याचन[10]क्रिय[11]एच्छा[12]-दीप्त्य[13]वाप्त्या[14]लिङ्गन[15]-हिंसा[16]-दहन[17]-भाव[18]-वृद्धिषु[19]' । इति **रक्षणीयाः** श्रमणोपासकैः प्रत्यनीकोपद्रवेभ्यः १ । एवं शेषार्थेष्वपि भाव्यते । अव्या **गमनीयाः** सेव्या इत्यर्थः २ । एवं **कमनीयास्त**त्तद्गुणैरभिलषणीयाः ३ । **प्रीणनीयाः** सम्मानादिभिः प्रमोदनीयाः ४ । **तर्प्पणीयाः** शुद्धान्नपानादिभिस्तृप्तिं प्रापणीयाः ५ । **अवगमनीया** यथावत् तत्स्वरूपभेदपरिकलनेन ज्ञातव्याः ६ । **प्रवेशनीया** यथाकृतवसत्यादिषु स्थापनीयाः ७ । **श्रवणीया** दूरस्थिताना तत्कुशलोदन्तग्रहणेन तद्गुणाकर्णनेन वा ८ । स्वस्य **स्वामित्वं प्रापणीयाः** ९ । **याचनीयाः** सम्यग्ज्ञान-दर्शन-चारित्राणि प्रार्थनीयाः १० । **करणीयाः** सदुपदेशदानादिभिः प्रतिबोध्य प्रव्राजनीयाः ११ । **एषणीयाः** स्वयमपि चारित्रेच्छया तद्रूपतां प्रतिपत्तुकामैः श्रमणोपासकैर्वाञ्छनीयाः १२ । **दीपनीयास्त**द्गुणप्रशंसनेन प्रकाशनीयाः १३ । **अवापनीयाः** स्थानस्थिता आगच्छन्तो वाऽभियानादिना समाश्रयणीयाः १४ । **आलिङ्गनीयास्त**द्गतैकमानसमाश्लेषणीयाः १५ । एवं संयमयोगे प्रमादवन्तः सन्तः संप्रति नोदनीयाः **पीडनीयाः,** एतदपि भावहितम् १६ । **दहनीयाः** शीतलविहारिणः सन्तः क्षारवचोभिस्तापनीयाः १७ । **भावनीयास्त**त्तत्स्वरूपख्यापनेन महापुरुषपङ्क्तिषु विद्यमाना गणनीयाः कार्याः । अस्य भावस्याज्ञातज्ञापनेन दीपनाद् विशेषः १८ । श्रमणोपासकैः सुष्ठु **वर्धनीयाः** सर्वप्रकारैर्वृद्धिं प्रोत्सर्पणां नेतव्याः साधवः १९ । स्वव्याश्च ते साधवश्च स्वव्यसाधवः श्रीआर्यसुहस्तिवत् संप्रतिमहाराजेन पूजिताः ।

"जह संपइरायराइणा जह नियगुरू सूरिसुहत्थिनामधिज्जा [ य ] ।
महिया विविहपयारभत्तीकरणेहिं तह सावएहिं कज्जं ॥ ४८ ॥"

अत्र च धातूनामनेकार्थतावत् क्वचिदन्तर्भूतण्यर्थताऽप्यदुष्टैव । तथा श्रीगौतमस्वाम्याद्याचार्या अपि साधुत्वेन विवक्षितास्तेषामपि साधुत्वेन साधुत्वाव्यभिचारादिति शुभम् ॥

[ कर्तुः प्रशस्तिः— ]

निजैर्गुणैर्ये परमेष्ठिनोऽमी, व्याप्ताः समग्रा अपि पूज्यपूज्याः ।
ते साधवः सन्तु मयि प्रसन्ना, देवेन्द्रमुख्यत्रिदशाभिवन्द्याः ॥ १ ॥
पञ्चपरमेष्ठिमन्त्रे, पञ्चमपरमेष्ठिपदगतौ वर्णौ ।
पञ्चम-षष्ठौ बह्वर्थरसभृतौ शाश्वतह्रदवत् ॥ २ ॥
तद्गतसदर्थविन्दुनादात्, कश्चन साधुगुणतृषितः ।
आगमिकगुरुजयानन्दशैक्षको देवरत्नाख्यः ॥ ३ ॥
आर्षप्राकृतलक्षणमतिसंकुलं वीक्ष्य पदमिदं क्षुण्णम् ।
यदनुचितमिह तदार्यैः, शोध्यं श्रुतभक्तितः सम्यक् ॥ ४ ॥

इति संपूर्णः ॥

'सिरिवीरपढमसीसो, सोहग्गमहानिही सुअसमुद्दो ।
नाणाविहलद्धिधरो, सिरिगोयमगणहरो जयइ ॥ ४० ॥"

३३ स्वर्वाः । सुष्ठु अर्वन्ति अगम्य स्थान मोक्षमपि यावद् गच्छन्तीति स्वर्वा । अतिशयिगमन-शक्तिभाज इत्यर्थ । सप्तमपृथ्वीगमनयोग्यत्वेऽपि तत्काल केवलज्ञानोत्पत्त्यादिसिद्धिगमनयोग्या , प्रसन्नचन्द्र-राजर्षिवत् ।

"वीरजिणकहियसत्तमपुढवीसव्वट्ठसिद्धिगइजोग्गो ।
नदउ पसन्नचदो, तक्काल केवल पत्तो ॥ ४१ ॥" (५–६५)

३४ शर्वाः । शर्वन्ति गच्छन्ति नानाद्युपसर्गपविमित्त गुर्वन्तरसमीपमिति शर्वा, श्रीआर्यरक्षितादिवत् ।

"तोसलिपुत्तायरियाण सीसरयण गुरूणऽणुन्नाए ।
सिरिअज्जरक्खियमुणी, सिखियरते सुअ भणिओ ॥ ४२ ॥"

३५ सर्व्याः । सर्व्यन्ते गम्यन्ते धर्मतत्त्वार्थिभिराश्रीयन्ते इति सर्व्या । चिलातीपुत्रेण मार्गे तटस्थसाधुपार्श्वे गत्वा समासेन धर्मतत्त्वे पृष्टे तदुपदेशकचारणश्रमणसाधुवत् ।

"इत्थिवहस्सवमाणे, चिलाइपुत्तो मणम्मि उव्विग्गो ।
पुच्छित्तु धम्मतत्त, मुणिपयठाणे ठिओ अचलो ॥ ४३ ॥"

३६ पुन साव्याः । अविर्मेषस्तस्य आ लक्ष्मी , अरस विरसाहारभक्षणजलपङ्कमीरुत्व शान्तत्व-लक्षणा अव्या तया सह वर्तन्ते ये ते साव्या । श्रीवीरप्रशसिततपोरूपलक्ष्मीक काकन्दीपुरीयधन्य-साधुवत् ।

"बत्तीस जुवइवई, जो काकन्दीपुरीइ पव्वइओ ।
छट्ठस्स सया पारणमुज्झियमायविल जस्स ॥ ४४ ॥ (५–१२८)
वीरपससियतव-रूव-लच्छि( द्धि ) नवमाससुकयपरियाओ ।
सो धन्नो सव्वट्ठे, पत्तो इक्कारसगविऊ ॥ ४५ ॥" (५–१२९)

३७ साप्याः । आपो जल तस्य आ लक्ष्मी , सहजनैर्मल्य–तापशान्ति-लालित्य-तृष्णाविच्छेद-मलविशुद्धिलक्षणा या, तया सह वर्तन्ते ये ते साप्या, । ऋजुता-क्षमा-मार्दव विषयवैमुख्य-केवलज्ञानो-त्पत्तिकलितकूरगडुकमुनिवत् ।

"सा कावि खमा त किपि मद्दव अज्जव च त किपि ।
जह कूरगडु अ महेसिणो समत्ताइ कज्जाइ ॥ ४६ ॥"

३८ शव्याः । श शर्वे, निर्विष्णु , अ अज स्वयम्भू , आद्यवर्णे शव्या , शिव-विष्णु-स्रष्टार , तत्तुल्या , मिथ्यात्वाविरति-कषायादीना स्वदोषाणा संहारकत्वेन तमोगुणमयत्वात् शर्वसदृशा , जगज्जन्तु-पालकत्वेन सत्त्वगुणमयत्वाद् विष्णुसमा , सम्यग्ज्ञान-दर्शनादीनामात्मगुणानामुत्पादकत्वेन रजोगुणमयत्वाद-जतुल्या । 'मिच्छामि दुक्कड' वत् प्रथमाक्षरै संज्ञा । श्रीरामचन्द्रादिमुनिवत् ।

